# YĀJNAVALKYASMṚTI

OF

## YOGĪŚVARA YĀJNAVALKYA

With the Commentary Mitākṣarā of Vijnānes'vara,
Notes, Varient readings etc.

FIFTH EDITION

Edited with notes etc. by

NARAYAN RAM ACHARYA

KAVYATIRTHA'

1949

NIRNAYA SAGAR PRESS, BOMBAY

श्रीमद्योगीश्वरमहर्षियाज्ञवल्क्यप्रणीता

# याज्ञवल्क्यस्मृतिः

...ेश्वरप्रणीतमिताक्षराव्याख्यया, बालंभट्टी-श्रीकर-
विश्वरूपापरार्कादिप्राच्यटीकापाठान्तर-
टिप्पण्यादिभिश्च सनाथीकृता ।

श्रीमदिन्दिराकान्ततीर्थचरणान्तेवासिना
**नारायण राम आचार्य 'काव्यतीर्थ'**
इत्यनेन टिप्पण्यादिभिरुपबृंह्य संशोधिता


पञ्चमं संस्करणम् : १९४९

...र्णयसागर-मुद्रणालयम्, मुंबई नं. २

# भूमिका

इह जगदारम्भात्प्रागजगतो विचारणायां 'नासदासीन्नो सदासीत्' 'तम आसीत्तमसा गूह्ळमग्रे प्रकेतं सलिलं सर्वमा इदं' 'अम्भः किमासीत्' इत्यादिश्रुतिवचोभ्यस्तर्कागोचरमेवाखिलं प्रतीयते। ततश्च 'को अद्धा वेद क इह प्रवोचत्कुत आ जाता कुत इयं विसृष्टिः।' इत्यादिविमर्शनोत्तरं 'यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद' इत्येवंरीत्या निर्णयश्च निगममूलक एवेति मानुषप्राणिदुस्तर्क्यमेव कृत्स्नं खलु। अथापि जगदन्तःपातिभिर्निजप्ररोहमूलगवेषणं स्वमतिपरिणामावध्यनुमेयमेव। निर्दिष्टरूपजगदभावदशायां च 'स ईक्षत बहु स्यां प्रजायेय' इति श्रुतेः सर्गादावतर्क्यैन्द्रजालिकेन सिसृक्षुणा भगवता स्थावरं जंगमं जगत् धर्माधर्मौ च सृष्ट्वाऽखिलव्यवहाराय तत्तच्छब्दानां तेन तेनार्थेन संबन्धं कल्पयित्वा धर्माधर्मप्रतिपादकपदे वेदान्कल्पयित्वा हिरण्यगर्भादिभ्यः प्रतिपादितास्तैरन्येभ्य इत्येवमुत्तरोत्तरं शब्दार्थप्रतिपत्तिः। एवं परंपरासादितश्रुतिभागा मन्त्रद्रष्टार ईशसृष्टजनतार्थं विशेषतश्च दुःषमानुभावेनापचीयमानमेधायुर्बलादिगुणानामैदंयुगीनमानुषप्राणिनां निःश्रेयसकाङ्क्षिणः परिकाङ्क्षिणोऽखिलव्यवहाराय केवलनिगमानामचारितार्थ्यं मन्वाना नानासूत्रस्मृतीतिहासादीन्धर्मशास्त्रप्रतिपादकान्निबन्धान्परिकल्पयांबभूवुः।

तथा च 'भारतं पञ्चमो वेदः' इति पञ्चमवेदत्वेन सुप्रतिष्ठितेऽखिलधर्मशास्तरि महाभारते युधिष्ठिरं प्रति भीमसेनवचः—'धर्ममर्थं च कामं च यथावद्वदतांवर। विभज्य काले कालज्ञः सर्वान्सेवेत पण्डितः।' इति। स्मृत्यन्तरेऽपि—'धर्ममर्थं च कामं च यथाशक्ति न हापयेत्।' इति। तथा—'न पूर्वाह्णमध्यंदिनापराह्णानफलान्कुर्याद्यथाशक्ति धर्मार्थकामेभ्यः' इति। तत्र निरतिशयानन्दलक्षणस्यात्यन्तिकदुःखनिवृत्तिलक्षणस्य वा मोक्षस्यैव निरुपधीच्छाविषयत्वात्पुरुषेणाभ्यर्थ्यमानतया मुख्यं पुरुषार्थत्वम्। धर्मादीनां तु तत्साधनमात्रेण। तत्रापि धर्ममात्रं यथायोगं सर्वेषां साधनम्। अत एव प्रवृत्तिनिवृत्त्यात्मकतया द्विविधस्याऽपि धर्मस्य पुरुषार्थसाधनतोक्ता वृद्धैः—'प्रवृत्तिलक्षणे धर्मे फलमभ्युदयो मतः। निवृत्तिसंज्ञके धर्मे फलं निःश्रेयसं मतम्॥' इति। स्कान्देऽपि—'धर्मात्सुखं च ज्ञानं च यस्मादुभयमाप्नुयात्। तस्मात्सर्वं परित्यज्य विद्वान्धर्मं समाचरेत्॥' इत्यादिपरःशतप्रमाणवचोनिचयैर्धर्म एवाखिलस्थितिहेतुत्वेन राद्धान्तितो दरीदृश्यते॥ तथा च धर्मशब्दं निर्णिनीषुः सुगृहीतनामा भगवान् जैमिनिरसुसूत्रत् "चोदनालक्षणोऽर्थो धर्मः" इति। अनेन सूत्रेण धर्मस्वरूपं तत्प्रमाणं चोच्यते। न तावद्यागापूर्वोभयनिष्ठा धर्मत्वं जातिः, यागस्य क्रियेच्छान्यतररूपतया क्रियात्वेनेच्छात्वेन च संकरात्। अतोऽपूर्वनिष्ठैव सुखकारणतावच्छेदिका धर्मत्वं जातिरिति नैयायिकाः। अपूर्वमजानतामपि यागादिकर्तरि धार्मिक इति प्रयोगाद्वेदबोधितेष्ट-

साधनत्वरूपो यागापूर्वोभयनिष्ठोपाधिरेव धर्मत्वमिति केचित्। वस्तुतस्तु अलौकिकश्रेयःसाधनत्वेन विहितक्रियात्वं विहितत्वं वा धर्मत्वमिति स्फुटं निरणायि विद्वल्ललामेन गागाभट्टेन॥ मिताक्षराकारस्तु—धर्मशब्दः षड्विधस्मार्तधर्मविषयः। तद्यथा—'वर्णधर्म आश्रमधर्मो वर्णाश्रमधर्मो गुणधर्मो निमित्तधर्मः साधारणधर्मश्चेति। तत्र "वर्णधर्मो नित्यं मद्यं वर्जयेत्" इत्यादिः। आश्रमधर्मोऽग्नीन्धनभैक्षचर्यादिः। वर्णाश्रमधर्मः पालाशो दण्डो ब्राह्मणस्येत्येवमादिः। गुणधर्मः शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिः। निमित्तधर्मो विहिताकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चित्तम्। साधारणधर्मोऽहिंसादिः न हिंस्यात्सर्वा भूतानीत्याचाण्डालं साधारणो धर्मः' इति। एवं गुणविशिष्टधर्मप्रतिपादकं शास्त्रमेव धर्मशास्त्रमिति जेगीयते। आस्तां दुरूहविषयमीमांसाविस्तरेण। प्रकृतमनुसरामः।

अखिलधर्माणामाचार-व्यवहार-प्रायश्चित्ताख्यकोटित्रयपर्यवसानात्तद्विवेचनमन्तरा दुर्ज्ञेयैव धर्मशास्त्रसिद्धिरिति विचार्य सर्वमानवप्राण्युद्दिधीर्षुः परमकारुणिको याज्ञवल्क्ययोगीन्द्रो निजनामधेयोट्टङ्कितां याज्ञवल्क्यस्मृतिमचीक्लृपत्। अथ च वाचंयमवचोगुम्फस्य सूत्रवदल्पाक्षरत्वेन दुरूहस्य यथावदवबुबोधयिषुरखिलश्रुतिस्मृतिशास्त्राब्धिपारदृश्वा सर्वतन्त्रस्वतन्त्रो विज्ञानेश्वरो विपुलार्थवतीमपि प्रमिताक्षरां मिताक्षरानाम्नीं याज्ञवल्क्यस्मृतिव्याख्यामरचत्।

यद्यपि याज्ञवल्क्यस्थितिकालः पुरुषायुषेण मतिमदग्रेसरेणापि निश्चेतुमशक्यस्तथापि श्रीमद्भागवतद्वादशस्कन्धे—'ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः। चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः॥' अस्यार्थः—एवं चतुर्युगेषु प्राप्ताः द्वापरादौ द्वापरमादिर्यस्य तदयनांशलक्षणस्य कालस्य तस्मिन्द्वापरान्ते वेदविभागसिद्धेः शंतनुकालसमकालं व्यासावतारप्रसिद्धेश्च। व्यस्ता विभक्ताः। 'अस्मिन्नप्यन्तरे ब्रह्मन्भगवाँल्लोकभावनः। ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये॥ पराशरात्सत्यवत्यामंशांशकलया विभुः। अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम्॥' इति। अतो द्वापरस्यान्तिमकाले कलियुगारम्भात्पूर्वं व्यासावतारः। स च तदानीमेव ऋगादिसंहिताश्चतस्रो विभज्यैकैकस्मै शिष्यायैकैकां संहितां ददौ। तत्र च यजुर्वेदसंहितां वैशंपायनायादात्। तस्यैवान्तेवासी याज्ञवल्क्यो बभूवेति निश्चीयते।

एकदा विदेहत्वेन सुप्रसिद्धस्य जनकस्य सदस्येव ब्रह्मवादचर्चाप्रसङ्गे कहोडादिब्रह्मर्षिवरै राज्ञा विदेहेन च याज्ञवल्क्याग्रे ब्रह्मविद्योपनिबद्धास्तत्र तत्र नैकशः पूर्वपक्षाः कृतास्तदानीं याज्ञवल्क्यो निजातर्क्यमतिवैभवेन सर्वेषां पूर्वपक्षाणां यथावदुत्तररूपेण सर्वान्समादधे। तच्छ्रुत्वा ससभास्तारो राजा दानमानादिसत्कारैस्तं संपूज्य प्रशस्य स एवानूचानतम इति निश्चित्य साष्टाङ्गं प्रणनामेति।

अथ श्रीमद्याज्ञवल्क्यमहर्षेरितिवृत्तं किमप्यत्र निर्दिश्यते । तच्च श्रुतिशिरोभागबृहदारण्यकोपनिषदि तृतीयाध्याये एवं निर्दिष्टमासीत्—कदाचन विदेहानां सम्राट् जनकराजः श्रुतिशास्त्रोदितवैदिककर्मण्यभिरतो बहुदक्षिणेन यज्ञेनायजत् । तत्र कुरुपाञ्चालवासिनो वैतानिककर्मनिष्णाता राज्ञा निमन्त्रिता ब्राह्मणाः केचन यज्ञदिदृक्षवश्चाभिसंगता बभूवुः । अथ मिलितं विद्वत्समाजमालोच्य यियक्षमाणस्य जनकस्य जिज्ञासा बभूव किल को नु खल्वत्रानूचानतमो ब्रह्मिष्ठ इति । स च गवां सहस्रं रुद्ध्वोवाच हे भगवन्तः, यो वो ब्रह्मिष्ठः स एता गा उत्कालयतु स्वगृहं प्रतीति । तदैते ब्राह्मणा न दधृषुः । अथ याज्ञवल्क्यो निजमन्तेवासिनमुवाच—हे सौम्य, उत्कालयेमा गा अस्मद्गृहान्प्रतीति । एतच्छ्रुत्वा स चोत्कालितवानाचार्यगृहं प्रतीत्याख्यायिकायामखिलविप्रसमाजापमाननमभवत् ।

अथ कदाचन वैशंपायनस्य ब्रह्महत्यादोष उदभूत् । तदंहोनिबर्हणाय वैशंपायनः स्वच्छात्रान् ब्रह्महत्यामार्जनक्षमं व्रतमादिदेश । तदानीं याज्ञवल्क्यः प्रोवाच—भगवन्, श्रीमदुक्तं व्रतं सुदुश्चरमप्यहमेवाचरिष्ये किमल्पसाराणामेतेषामादेशेनेति । तदिदं विप्रावमानकारकं याज्ञवल्क्योक्तं श्रुत्वा वैशंपायनश्चुक्रोध । आह च याज्ञवल्क्यं ब्राह्मणावमन्ता त्वमसि, अतो मत्तो यदधीतं तत्सर्वं त्यक्त्वा याहीति । तदसहिष्णुर्याज्ञवल्क्योऽधीतं यजुर्वेदगणं छर्दित्वा गुरुमुत्सृज्यागच्छत् । आरराध च भगवन्तं सूर्यनारायणमेकान्तभावेन । निःसीमनिजपरिचरणपरितुष्टो भगवानादित्योऽयातयामानि यजूंषि तस्मै प्रायच्छत् । तैर्याज्ञवल्क्यो वाजसनीसंज्ञाः शाखा अकरोत् इति श्रीमद्भागवते । विज्ञानेश्वरविषये मिताक्षरोपसंहारे—

'नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरं
नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः ।
विज्ञानेश्वरपण्डितो न भजते किं चान्यदन्योपम-
श्चाकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्त्रयम् ॥
स्रष्टा वाचां मधुरवपुषां विद्वदाश्चर्यसीम्नां
दातार्थानामतिशयजुषामर्थिसार्थार्थनायाः ।
आ च प्राचः समुद्रान्ततनृपतिशिरोरत्नभाभासुराङ्घ्रिः
[illegible]द्भर्तारं जगदिदमखिलं विक्रमादित्यदेवः ॥'

इत्यादिलेखादस्य [illegible]क्रमादित्यकालीनत्वं स्फुटं भवति । तत्र कल्याणपुरमितिनाम्ना प्रसिद्धं [illegible]गरमस्त्यधुना हैदराबादराज्ये कल्याणकीर्तिनाम्ना प्रथितम् । तत्रत्या राजानश्चौलुक्यान्ववायाः । तेषां वंशावलिर्दक्षिणेतिहासाख्यकोशे भाण्डारकरोपाह्वै रामकृष्ण गोपालसंज्ञया प्रथितैः सविस्तरं प्रकाशितास्ति । तत्रैव विक्रमादित्यराजा समजनि यदाश्रयेणैव विदुषामग्रेसरेण विज्ञानेश्वरेण मिताक्षराख्या याज्ञवल्क्यस्मृतिव्याख्या निरमायि । तस्य

च राज्यकालो ध्यूनसहस्रशाकमारभ्य ध्यूनपञ्चाशदधिकसहस्रमितशकपर्यन्तं पञ्चाशदब्दमित एवासीत्। एवं सति गुर्जराङ्कितयाज्ञवल्क्यस्मृतिप्रस्तावे बापूशास्त्रीमोघे इत्येतैः 'विक्रमादित्यकालीनोऽयं विज्ञानेश्वरः तद्ग्रन्थस्य मिताक्षराख्यस्य संवदभिधशकप्रवर्तकविक्रमादित्यदेवकालिकतावसीयते' इत्यादि-प्रकटितं परास्तम्।

एतच्छोधने संगृहीतहस्तलिखितप्राचीनादर्शाः—

१ वे. शा. सं. बाळशास्त्री पुराणिक नागांव इत्येतैर्दत्तमेकं पुस्तकं भिन्न-पाठान्तरप्रचुरं प्रायः शुद्धम्।

२ वे. शा. सं. नीलकंठशास्त्री (नानाशास्त्री) देवस्थळी सावंतवाडी इत्येतैर्दत्तं पाङ्कं सामान्यतः शुद्धम्।

३ वे. रा. रा मोरेश्वरभट्ट खरे मालवण इत्येतैर्दत्तं व्यवहाराध्यायरहितम्।

४ मुम्बई–विश्वविद्यालयस्थमेकं शुद्धं प्राचीनतमम्।

५ अस्मत्संग्रहस्थादर्शचतुष्टयम्।

# याज्ञवल्क्यस्मृतिस्थविषयाणामनुक्रमणिका ।

## आचाराध्यायः १

इत्याचाराध्यायः ।

---

## अथ व्यवहाराध्यायः २

**साधारणव्यवहारमातृकाप्रकरणम् १**

## असाधारणव्यवहारमातृकप्रकरणम् २

| विषयाः | पृष्ठं |
|---|---|



| विषयाः | पृष्ठं |
|---|---|

## ऋणादानप्रकरणम् ३

| विषयाः | पृष्ठं |
|---|---|



## स्वामिपालविवादप्रकरणम् १०



## स्वामिविक्रयप्रकरणम् ११



## दत्ताप्रदानिकप्रकरणम् १२

## साहसप्रकरणम् २०



## विक्रीयासंप्रदानप्रकरणम् २१

---

## प्रायश्चित्ताध्यायः ३

**आशौचप्रकरणम् १**

| विषयाः | पृष्ठं |
|---|---|



| विषयाः | पृष्ठं |
|---|---|

## प्रकीर्णकप्रायश्चित्तानि ६

इति विषयानुक्रमणिका समाप्ता ।

# याज्ञवल्क्यस्मृतिः

## मिताक्षरासंवलिता ।

## [ आचाराध्यायः १ ]

### उपोद्घातप्रकरणम्

श्रीगणेशाय नमः ।

धर्माधर्मौ तद्विपाका[1]स्त्रयोऽपि क्लेशाः[2] पञ्च प्राणिनामायतन्ते ।
यस्मिन्नेतैर्नो परामृष्ट ईशो[3] यस्तं वन्दे विष्णुमोंकारवाच्यम् ॥ १ ॥
याज्ञवल्क्यमुनिभाषितं मुहुर्विश्वरूपविकटोक्तिविस्तृतम् ।
धर्मशास्त्रमृजुभिर्मिताक्षरैर्बालबोधविधये विविच्यते ॥ २ ॥

याज्ञवल्क्यशिष्यः कश्चित्प्रश्नोत्तररूपं याज्ञवल्क्यमुनिप्रणीतं धर्मशास्त्रं संक्षिप्य कथयामास—यथा म[1]नुप्रणीतं भृगुः । तस्य चायमाद्यश्लोकः—

**योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन् ।**
**वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः ॥ १ ॥**

**योगिनां** सनकादीनामी**श्वरः**[4] श्रेष्ठ[2]स्तं **याज्ञवल्क्यं संपूज्य** मनोवाक्कायकर्मभिः पूजयित्वा **मुनयः** सा[3]मश्रवःप्रभृतयः श्रवणधारणयोग्या **अब्रुवन्** उक्तवन्तः **धर्मान्नो**ऽस्मभ्यं **ब्रू**[4]**हीति** । कथम्? **अशेषतः** कार्त्स्न्येन । केषाम्? **वर्णाश्रमेतराणाम्,** वर्णा ब्राह्मणादयः, आश्रमा ब्रह्मचारिप्रभृतयः,[5] इतरेऽनुलोमप्रतिलोमजाता मूर्धावसिक्तादयः । 'इतर'शब्दस्य 'द्वन्द्वे च' ( पा. १।१।३१ ) इति सर्वनामसंज्ञाप्रतिषेधः । अत्र च 'धर्म'शब्दः षड्विधस्मा[5]र्तधर्मविषयः । तद्यथा—

**टिप्प०**—1 जात्यायुर्भोगा विपाकाः । 2 अविद्याऽस्मितारागद्वेषाभिनिवेशाख्याः क्लेशाः । तत्र सम्यगध्यात्मविद्भिर्दर्शितार्थे विपरीतं ज्ञानमविद्या । अहमस्मि मद्विशिष्टः कोऽपि नास्तीत्यभिमानातिशयोऽस्मिता । विषयेष्वासक्ती रागः । दुःखेष्वप्रीतिर्द्वेषः । अननुभूतादपि मरणादेस्त्रासोऽभिनिवेश इति । 3 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति वचनात् । 4 एवं चाणिमादिगुणपर एवायमीश्वरशब्दः, ततश्च योगी चासावीश्वरश्चेति मुख्यार्थोभयशब्दः कर्मधारयः, नतु योगिनामीश्वर इति षष्ठीतत्पुरुषः; षष्ठ्यर्थलक्षणाप्रसंगात् । कर्मधारयपक्षे तु योगनिमित्तमणिमाद्यैश्वर्यं ग्रन्थकारस्य गम्यते—इत्यपरार्कः । 5 'चत्वार आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाः' इति **वसिष्ठः** ।

**पाठा०**—१ मनुनोक्तं ख. २ प्रभुस्तं ख. ३ सोमश्रवादयः क. ४ ब्रूहि कथयेति क. ५ स्मार्तकर्मविषयः क.

वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्चेति। तत्र वर्णधर्मो ब्राह्मणो नित्यं मद्यं वर्जयेदित्यादिः। आश्रमधर्मोऽग्नीन्धनभैक्षचर्यादिः। वर्णाश्रमधर्मः पालाशो दण्डो ब्राह्मणस्येत्येवमादिः। गुणधर्मः शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापरिपालनादिः। निमित्तधर्मो विहिताकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चित्तम्। साधारणधर्मोऽहिंसादिः। 'न हिंस्यात्सर्वा भूतानि' इत्याचण्डालं साधारणो धर्मः। 'शौचाचारांश्च शिक्षयेत्' इत्याचार्यकरणविधिप्रयुक्तत्वाद्धर्मशास्त्राध्ययनस्य प्रयोजनादिकथनं नातीवोपयुज्यते। तत्र चायं क्रमः—प्रागुपनयनात्कामचारकामवादकामभक्षाः। ऊर्ध्वमुपनयनात्प्रागवेदाध्ययनोपक्रमाद्धर्मशास्त्राध्ययनं, ततो धर्मशास्त्रविहितयमनियमोपेतस्य वेदाध्ययनं, ततस्तदर्थजिज्ञासा, ततस्तदर्थानुष्ठानमिति। तत्र यद्यपि धर्मार्थकाममोक्षाः शास्त्रेणानेन प्रतिपाद्यन्ते, तथापि धर्मस्य प्राधान्याद्धर्मग्रहणम्। प्राधान्यं च धर्ममूलत्वादितरेषाम्। नच वक्तव्यं धर्ममूलोऽर्थोऽर्थमूलो धर्म इत्यविशेष इति। यतोऽर्थमन्तरेणापि जपतपस्तीर्थयात्रादिना धर्मनिष्पत्तिः, अर्थलेशोऽपि न धर्ममन्तरेणेति। एवं काममोक्षावपीति ॥ १ ॥

एवं पृष्टः किमुवाचेत्याह—

**मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाऽब्रवीन्मुनीन्।**
**यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत ॥ २ ॥**

**मिथिला**नाम नगरी तत्र **स्थितः स** याज्ञवल्क्यो **योगीश्वरः क्षणं ध्यात्वा** किंचित्कालं मनः समाधाय एते श्रवणाधिकारिणो विनयेन पृच्छन्तीति युक्तमेतेभ्यो वक्तुमित्युक्तवान्**मुनीन्**। किम्? **'यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत'**– इति। कृष्णसारो मृगो यस्मिन्देशे स्वच्छन्दं विहरति तस्मिन्देशे वक्ष्यमाणलक्षणा धर्मा अनुष्ठेया नान्यत्रेत्यभिप्रायः ॥ २ ॥

'शौचाचारांश्च शिक्षयेत्' इत्याचार्यस्य धर्मशास्त्राध्यापनविधिः। शिष्येण तदध्ययनं कर्तव्यमिति कुतोऽवगम्यत इत्यत आह—

**पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ ३ ॥**

**पुराणं** ब्राह्मादि, **न्यायस्**तर्कविद्या, **मीमांसा** वेदवाक्यविचारः, **धर्मशास्त्रं** मानवादि, **अङ्गानि** व्याकरणादीनि षट्, एतैरुपेताश्चत्वारो **वेदाः**, **विद्याः** पुरुषार्थसाधनानि, तासां **स्थानानि** च चतुर्दश, **धर्मस्य च चतुर्दश**

---

**टिप्प०**—1 अयमेव पाठो युक्तः। 2 **अपरार्कस्तु**–'कृष्णशब्दो हरिणवचनः, कृष्णाजिनं कृष्णविषाणः, यावत्कृष्णमृगो विचरतीति प्रयोगात्' इत्युपक्रम्य 'कृष्णशब्दादर्थान्तरावबोधो मा भूदित्यत उक्तं–मृग इति–इत्याह।

---

**पाठा०**—१ वर्जयेदिति क. २ सर्वभूतानि इति ख. ३ श्रुत्युक्तशौचाचारान् ख. ४ जपतीर्थयात्रा क; ख. ५ पुरुषार्थज्ञानानि क; पुरुषार्थसाधनज्ञानानि ख.

**स्थानानि** हेतवः। एतानि च त्रैवर्णिकैरध्येतव्यानि। तदन्तर्भूतत्वाद्धर्मशास्त्रमप्यध्येतव्यम्। तत्रैतानि ब्राह्मणेन विद्याप्राप्तये धर्मानुष्ठानाय चाधिगन्तव्यानि। क्षत्रियवैश्याभ्यां धर्मानुष्ठानाय। तथा च **शङ्खेन** विद्यास्थानान्युपक्रम्योक्तम्—'एतानि ब्राह्मणोऽधिकुरुते स च वृत्तिं दर्शयतीतरेषाम्' इति। मनुरपि द्विजातीनां धर्मशास्त्राध्ययनेऽधिकारः, ब्राह्मणस्य प्रवचने नान्यस्येति दर्शयति (२।१६) 'निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः। तस्य शास्त्रेऽधिकारोऽस्मिञ्ज्ञेयो नान्यस्य कर्हिचित्॥ विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः। शिष्येभ्यश्च प्रवक्तव्यं सम्यङ् नान्येन केनचित्॥' इति॥ ३॥

अस्तु धर्मशास्त्रमध्येतव्यं, याज्ञवल्क्यप्रणीतस्यास्य शास्त्रस्य किमायातमित्यत आह—

**मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।**
**यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती॥ ४॥**
**पराशरव्यासशङ्खलिखिता दक्षगौतमौ।**
**शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः॥ ५॥**

'उशनः'शब्दपर्यन्तो द्वन्द्वैकवद्भावः। याज्ञवल्क्यप्रणीतमिदं धर्मशास्त्रमध्येतव्यमित्यभिप्रायः। नेयं परिसंख्या, किंतु प्रदर्शनार्थमेतत्। अतो बौधायनादेरपि धर्मशास्त्रत्वमविरुद्धम्। एतेषां प्रत्येकं प्रामाण्येऽपि साकाङ्क्षाणामाकाङ्क्षापरिपूरणमन्यतः क्रियते। विरोधे विकल्पः॥ ४॥ ५॥

इदानीं धर्मस्य कारकहेतूनाह—

**देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम्।**
**पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम्॥ ६॥**

**देशो** 'यस्मिन्देशे मृगः कृष्णः' (१।२) इत्युक्तलक्षणः, **कालः** संक्रान्त्यादिः, **उपायः** शास्त्रोक्तेतिकर्तव्यताकलापः, **द्रव्यं** प्रतिग्रहादिलब्धं गवादि, **श्रद्धा** आस्तिक्यबुद्धिः, **तदन्वितं** यथा भवति तथा। **पात्रं** 'न विद्यया केवलया' (आचार. ९।२००) इत्येवमादिवक्ष्यमाणलक्षणम्। **प्रदीयते** यथा न प्रत्यावर्तते

**टिप्प०**—1 प्रयोजकाः=प्रणेतारः। 2 'अङ्गिरःशब्दपर्यन्तः समाहारद्वन्द्वो नपुंसकलिङ्ग एकवचनान्तः' इत्युपक्रम्य भविष्यपुराणमुदाहरति **चापरार्कः**–'मन्वादिस्मृतयो यास्तु षट्त्रिंशत्परिकीर्तिताः' इति। **गौतमो**ऽपि 'मनुविष्णुदशाङ्गिरोऽत्रि–' इत्यादिनाङ्गिरसान्तर्भावमाह। 3 'षट्त्रिंशत् स्मृतयः स्मृताः' इति वचनव्युदासार्थं चेयमुक्तिः। 4 परिसंख्या नाम एकस्यानेकत्र प्राप्तस्यान्यतो निवृत्त्यर्थमेकत्र पुनर्वचनम्। एतद्विस्तरोऽग्रे ८१ श्लोकस्य मिताक्षरायां द्रष्टव्यः।

**पाठा०**—१ तदन्तर्गतत्वात् क. २ तत्र ब्राह्मणेनैतानि क. ३ कस्यचित् क. ४ °ऽङ्गिरः. ५ प्रवर्तका क.

तथा परस्वत्वापत्त्यवसानं लभ्यते । एतद्धर्मस्योत्पादकम् । किमेतावदेव नेत्याह—**सकल**मिति । अन्यदपि शास्त्रोक्तं जातिगुणहोमयागादि तत्सकलं **धर्मस्य कारणं** जातिगुणद्रव्यक्रियाभा[1]वार्थात्मकं चतुर्विधं धर्मस्य कारणमित्युक्तं भवति । तच्च समस्तं व्यस्तं वा यथाशास्त्रं द्रष्टव्यम् । श्र[2]द्धा सर्वत्रानुवर्तत एव ॥ ६ ॥

इदानीं धर्मस्य ज्ञापकहेतूनाह—

**श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।**
**सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ ७ ॥**

**श्रु[3]ति**र्वेदः, **स्[4]मृति**र्धर्मशास्त्रम्, तथा च मनुः ( २।१० ) 'श्रुतिस्तु वेदो विज्ञेयो धर्मशा[१]स्त्रं तु वै स्मृतिः' इति । **सदाचारः** सतां शिष्टानामाचारोऽनु-ष्[२]ठानम्, **स्वस्य चात्मनः प्रियं**, वैकल्पिके विषये यथा–'गर्भाष्टमेऽष्टमे वाब्दे' ( आचार. २।१४ ) इ[३]त्यादावात्मेच्छैव नियामिका । **सम्यक्संकल्पाज्जातः कामः** शास्त्रविरु[४]द्धो यथा—'मया भोजनव्यतिरेकेणोदकं न पातव्यम्' इति । एते **धर्मस्य मूलं** प्रमाणम् । एतेषां विरोधे पूर्वपूर्वस्य बलीयस्त्वम् ॥ ७ ॥

देशादिकारकहेतूनामपवादमाह—

**इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।**
**अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥ ८ ॥**

**इज्यादीनां कर्मणाम[5]यमेव परमो धर्मः यद्योगेन** बाह्य[6]चित्तवृत्ति-निरोधेना**त्मनो दर्शनं** याथातथ्यज्ञानम् । योगेनात्मज्ञाने देशादिनियमो नास्ती-त्यर्थः । तदुक्तं '[7]यत्रैकाग्रता तत्राविशेषात्' (ब्र. सू. ४।१।६।१०) इति[५] ॥ ८ ॥

कारकहेतुषु ज्ञापकहेतुषु वा संदेहे तु निर्णयहेतुमाह—

**चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।**
**सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥९॥**

**चत्वारो** ब्राह्मणाः **वे[६]दधर्मशास्त्रज्ञाः पर्षत्** । तिस्रो विद्या अधीयन्त इति **त्रैवि[8]द्याः**, तेषां समूहस्त्रैविद्यम् । धर्मशास्त्रज्ञत्वमत्राप्यनुवर्तते, **तद्वा** पर्षत् ।

---

**टिप्प०**—1 भावार्थः=श्रद्धा । 2 यथासंभवमिदं ज्ञेयम्; 'श्रद्धया देयमश्रद्धय-देयम्', 'सर्वावस्थां गतोऽपि वा' इत्यादिविरोधापत्तिप्रसङ्गात् । 3 श्रुतिस्मृतिसदाचाराः । 4 स्मृतिर्धर्मतो वेदमूलं शास्त्रम्–इत्यपरार्कः । 5 मूले 'अयं तु' इत्यत्रत्यः 'तुः' अवधारणार्थः । 6 तथा च पातञ्जलयोगसूत्रम् ( १।२ ) 'योगश्चित्तवृत्तिनिरोध' इति । 7 यत्रैवास्य दिशि देशे काले वा मनसः सौकर्येणैकाग्रता तत्रैवोपासीत' इत्याचार्याः । यत्र पुरुषे एकाग्रता तत्र देशादिविशेषमनपेक्ष्य सिद्धिरित्यन्ये । 8 ऋग्यजुःसामवेदारूपा विद्याः ।

---

**पाठा०**—१ विरोधे तु ख. २ नुष्ठानं नाशिष्टानाम् ख. ३ इत्यत्रात्मे-च्छैव, इत्यादिष्वात्मेच्छैव ख. ४ शास्त्राविरुद्धः कामो यथा ख. ५ पातञ्जले. ६ वेदशास्त्रधर्मज्ञाः ख.

सा पूर्वोक्ता पर्षत् यं ब्रूते स धर्मः । अध्यात्मज्ञानेषु निपुणतमो धर्मशास्त्रज्ञश्च[1] एकोऽपि वा यं ब्रूते सोऽपि धर्मः[2] ॥ ९ ॥

इत्युपोद्घातप्रकरणम् ।

---

## अथ ब्रह्मचारिप्रकरणम् १

एतैर्नवभिः श्लोकैः सकलशास्त्रोपोद्घातमुक्त्वा इदानीं वर्णादीनां धर्मान्वक्तुं प्रथमं तावद्वर्णानाह—

**ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।**
**निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥१०॥**

**ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा** वक्ष्यमाणलक्षणास्तेषामाद्यास्त्रयो ब्राह्मणक्षत्रियवैश्या **द्विजाः**,–द्विर्जायन्त इति द्विजाः, **तेषां** द्विजानां **वै** एव न[3] शूद्रस्य[1], एतेन शूद्रस्यामन्त्रकाः क्रियाः इत्युक्तं भवति; 'शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः' इति यमोक्तेः । **निषेकाद्याः** निषेको गर्भाधानमाद्यो यासां तास्तथोक्ताः । **श्मशानं** पितृवनं तत्संबन्धि कर्म अन्तो[4] यासां ताः **क्रिया मन्त्रैर्भवन्ति** ॥ १० ॥

इदानीं ताः क्रिया अनुक्रामति—

**गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा ।**
**षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च ॥ ११ ॥**
**अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।**
**षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् ॥ १२ ॥**

**गर्भाधान**मित्यनुगतार्थं कर्मनामधेयम् । एवं वक्ष्यमाणान्यपि । तद्गर्भाधानम् **ऋतौ** ऋतुकाले वक्ष्यमाणलक्षणे । **पुंसवना**ख्यं कर्म गर्भचलनात्पूर्वम् । **षष्ठेऽष्टमे** वा मासि **सीमन्तोन्नयनम्** । एते च द्वे पुंसवन-सीमन्तोन्नयने क्षेत्रसंस्कारकर्मत्वात्सकृदेव कार्ये, न[1] प्रतिगर्भम् । यथाह **देवलः**—'सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता । यं यं गर्भं प्रसूयेत स सर्वः संस्कृतो भवेत्' इति । यद्वा,–एते आ इते आगते गर्भकोशाज्जाते कुमारे[5] **जातकर्म । एकादशेऽहनि नाम**[6] । तच्च पितामहमातामहादिसंबद्धं कुलदेवतासंबद्धं वा । यथाह **शङ्खः** ( २।१४ )—'कुलदेवतासंबद्धं पिता नाम कुर्यात्' इति । **चतुर्थे मासि**

---

**टिप्प०**—1 **पारस्करस्तु**—'अथ सीमन्तोन्नयनं पुंसवनवत् प्रथमगर्भे' इत्युभयोः क्षेत्रसंस्कारतां निरूपयति । तत्तु हारीताद्यसंमतम्; सीमन्तोन्नयनस्य स्त्रीसंस्कारत्वात् ।

---

**पाठा०**—१ वेदधर्मशास्त्रज्ञश्च क. २ सोऽपि धर्म एव ख. ३ न शूद्राणां क. ४ अन्ते यासां ख. ५ कुमारे जाते ख. ६ नामकरणम् ख.

निष्क्रमणलक्षणं सूर्यावेक्षणं कर्म। **षष्ठे मास्यन्नप्राशनं** कर्म। **चूडाकरणं तु यथाकुलं कार्यमिति** प्रत्येकं संबद्ध्यते ॥ ११-१२ ॥

एतेषां नित्यत्वेऽप्यानुषङ्गिकं फलमाह—

**एवमेनः शमं याति बीजगर्भसमुद्भवम् ।**

**एवमुक्तेन** प्रकारेण गर्भाधानादिभिः संस्कारकर्मभिः कृतै**रेनः** पापं **शमं याति**। किंभूतम्? **बीजगर्भसमुद्भवं** शुक्रशोणितसंबद्धं गात्रव्याधिसंक्रान्तिनिमित्तं वा, नतु पतितोत्पन्नत्वादि ॥—

स्त्रीणां विशेषमाह—

**तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥ १३ ॥**

**एता** जातकर्मादिकाः **क्रियाः स्त्रीणां तूष्णीं** विनैव मन्त्रैर्यथाकालं कार्याः। **विवाहः** पुनः **समन्त्रकः** कार्यः ॥ १३ ॥

उपनयनकालमाह—

**गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।**
**राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ १४ ॥**

गर्भाधानमादिं कृत्वा जननं **वाष्टमे** वर्षे **ब्राह्मणस्योपनायनं** उपनयनमेवोपनायनम्। स्वार्थे अण्। वृत्तानुसारात्[2], छन्दोभङ्गात्। आर्षं वा दीर्घत्वम्। अत्रेच्छया विकल्पः। **राज्ञामेकादशे**[1]। **विशां** वैश्यानां **सैके एकादशे**। द्वादशे इत्यर्थः। 'गर्भ'ग्रहणं सर्वत्रानुवर्तते। समासे गुणभूतस्यापि 'गर्भ'शब्दस्य बुद्ध्या विभज्योभयत्राप्यनुवर्तनं कार्यम्। 'गर्भादेकादशे राज्ञो गर्भाद्धि द्वादशे विशः' (शंख. २।७) इति स्मृत्यन्तरदर्शनात्[3]। यथा अथ शब्दानुशासनं, केषां शब्दानाम्[4]? लौकिकानां वैदिकानामिति। अत्रापि कार्यमित्यनुवर्तते। **कुलस्थित्या केचिदुपनयनमिच्छन्ति** ॥ १४ ॥

गुरुधर्मानाह—

**उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।**
**वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥ १५ ॥**

स्वगृह्योक्तविधिनो**पनीय गुरुः शिष्यं**[5] **महा**[2]**व्याहृतिपूर्वकं वेदमध्यापयेत्**। महाव्याहृतयश्च भूरादिसत्यान्ताः सप्त। पञ्च[3] वा गौतमाभिप्रायेण। किंच

---

**टिप्प०**—1 'राज'शब्दोऽयं क्षत्रियजातिमात्रवाचको न त्वभिषेकादिगुणयुक्तपर इति ज्ञेयम्; 'गर्भादेकादशे राज्ञः' (मनु. २।३६) इत्यत्र 'राजशब्दोऽयं क्षत्रियजातिवचनः, नाभिषेकादिगुणमपेक्षते' इति **मेधातिथि**व्याख्यानात्। 2 भूः, भुवः, सुवः, महः, जनः, तपः, सत्यम् इति सप्तमहाव्याहृतयः। 3 'ॐपूर्वा व्याहृतयः पञ्च सत्यान्ताः' इति **गौतमः** (१।५२), 'भूः, भुवः, स्वः, पुरुषः, सत्यम्—इति **हरदत्तः**।

---

**पाठा०**—१ अवधिं कृत्वा जन्मनो ख. २ प्रकरणानुसारम् क. ३ वचनात् ख. ४ शब्दानामिति क. ५ शिष्यं गुरुः ख.

**शौचाचारांश्च** वक्ष्यमाणलक्षणान् **शिक्षयेत्**। 'उपनीय शौचाचारांश्च शिक्षयेत्' इत्यनेन प्रागुपनयनात्कामचारो दर्शितो वर्णधर्मान्वर्जयित्वा। स्त्रीणामप्येतत्समानं विवाहादर्वाक्; उपनयनस्थानीयत्वाद्विवाहस्य ॥ १५ ॥

शौचाचारानाह—

**दिवासंध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः।**
**कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥ १६ ॥**

**कर्णस्थं ब्रह्मसूत्रं** यस्य स तथोक्तः। कर्णश्च दक्षिणः, 'पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमुत्सृजेत्' इति लिङ्गात्। असावहनि संध्ययोश्च **उदङ्मुखो मूत्रपुरीषे कुर्यात्**। चकाराद्भस्मादिरहिते देशे। **रात्रौ** तु **दक्षिणामुखः** १६

**गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः।**
**गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ १७ ॥**

किंच, अनन्तरं **शिश्नं गृहीत्वोत्थायोद्धृताभिरद्भि**र्वक्ष्यमाणलक्षणाभिर्**मृद्भिश्च गन्धलेपयोः क्षयकरं शौचं कुर्यात्। अतन्द्रितो**ऽनलसः। उद्धृताभिरद्भिरिति जलान्तःशौचनिषेधः। अत्र **'गन्धलेपक्षयकरम्'** इति सर्वाश्रमिणां साधारणमिदं **शौचम्**। मृत्संख्यानियमस्त्वदृष्टार्थः ॥ १७ ॥

**अन्तर्जानु शुचौ देश उपविष्ट उदङ्मुखः।**
**ब्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ १८ ॥**

**शुचौ** अशुचिद्रव्यासंस्पृष्टे। **देश** इत्युपानच्छयनासनादिनिषेधः। **उपविष्टो** न स्थितः शयानः प्रह्वो गच्छन्वा। **उदङ्मुखः प्राङ्मुखो** वेति दिगन्तरनिवृत्तिः। 'शुचौ देशे' इत्येतस्मात्पादप्रक्षालनप्राप्तिः। **ब्राह्मेण तीर्थेन** वक्ष्यमाणलक्षणेन **द्विजो** न शूद्रादिः। **नित्यं** सर्वकालमाश्रमान्तरगतोऽपि। **उपस्पृशेदा**चामेत्। कथम्? अन्तर्जानु जानुनोर्मध्ये हस्तौ कृत्वा दक्षिणेन हस्तेनेति ॥ १८ ॥

प्राजापत्यादितीर्थान्याह—

**कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च।**
**प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ १९ ॥**

कनिष्ठायास्तर्जन्या अङ्गुष्ठस्य च मूलानि करस्याग्रं च प्रजापतिपितृब्रह्मदेवतीर्थानि यथाक्रमं वेदितव्यानि ॥ १९ ॥

---

**टिप्प०—1** एतत्=कामचार–कामवाद–कामभक्षादिकम्। 2 दिवासन्ध्यासु इति समस्तं पदम्, दिवा च सन्ध्ये चेति द्वन्द्वमभिप्रेत्योक्तं—अहनि संध्ययोश्चेति। 3 गन्धस्य लेपः इति षष्ठीतत्पुरुषभ्रमनिरासाय–'गन्धलेपयोः क्षयकरं' इति द्वन्द्वप्रतिपादकं विवरणम्। 4 'बाहुं जान्वन्तरा कृत्वा' इति **गौतमः**; 'बाहू जान्वन्तरा कृत्वा' इति **व्यासः**। द्विजेनापि एकेन पाणिना यदावर्जितं तेनोदकेन नाचामेत् इत्याशयः।

---

**पाठा०—१** शौचमिदं ख. २ इत्युपादानात् ख.

आचमनप्रकारः—

**त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ।**
**अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥ २० ॥**

**वारत्रयमपः पीत्वा** मुखमङ्गुष्ठमूलेन **द्विरुन्मृज्य खानि** छिद्राणि ऊर्ध्वकायगतानि घ्राणादीनि **अद्भिरुपस्पृशेत्** । **अद्भिर्**द्रव्यान्तरासंसृष्टाभिः । पुनरद्भिरित्यब्ग्रहणं प्रतिच्छिद्रमुदकस्पर्शनार्थम् । स्मृत्यन्तरात्—'अङ्गुष्ठेन प्रदेशिन्या घ्राणं चैव मुखं स्पृशेत् । अङ्गुष्ठानामिकाभ्यां च चक्षुःश्रोत्रं पुनः पुनः ॥ कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं तु तलेन वै । सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥' इति । पुनस्ता एव विशिनष्टि—**प्रकृतिस्थाभिः** गन्धरूपरसस्पर्शान्तरमप्राप्ताभिः । **फेनबुद्बुद**रहिताभिः । **तु** शब्दाद्वर्षधारागतानां शूद्राद्यावर्जितानां च निषेधः ॥ २० ॥

**हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ।**
**शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ २१ ॥**

**हृत्कण्ठतालुगाभिर**द्भिर्यथाक्रमेण **द्विजातयः शुध्यन्ति । स्त्री च शूद्रश्च अन्ततः** अन्तर्गतेन **तालुना स्पृष्टाभिरपि** । **'सकृत्'** इति वैश्याद्विशेषः । **च**शब्दादनुपनीतोऽपि ॥ २१ ॥

**स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ।**
**सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ २२ ॥**

प्रातः**स्नानं** यथाशास्त्र**मब्दैवतैर्मन्त्रैः** 'आपोहिष्ठा' इत्येवमादिभि**र्मार्जनम्** । **प्राणसंयमः** प्राणायामो वक्ष्यमाणलक्षणः । ततः **सूर्यस्योपस्थानं** सौरमन्त्रेण **गायत्र्याः** । 'तत्सवितुर्वरेण्यम्'[1] इत्यार्यायाः प्रतिदिवसं **जपः** कार्यः । 'कार्य'-शब्दो यथालिङ्गं प्रत्येकमभिसंबध्यते ॥ २२ ॥

प्राणायामविचारः—

**गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् ।**
**प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ २३ ॥**

**गायत्रीं** पूर्वोक्ताम्, 'आपोज्योतिः' इत्यादिना **शिरसा** संयुक्तां **उक्तव्याहृतिपूर्विकां प्रतिव्याहृति प्रणवेन संयुक्तां** ॐभूः ॐभुवः ॐस्वरिति **त्रीन्वारान्**मुखनासिकासंचारि**वायुं निरुन्धन्** मनसा जपेदित्ययं सर्वत्र प्राणायामः ॥ २३ ॥

सावित्रीजपप्रकारः—

**प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु ।**
**जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ॥ २४ ॥**

---

**टिप्प०**—1 वयं तत् शुद्धं ब्रह्म, **धीमहि** ध्यायेम, **सवितुः** 'षू प्रेरणे' सकलप्रेरकस्य, **देवस्य** क्रीडमानस्य, **वरेण्यं** श्रेष्ठतमं, **भर्गस्तेजः**, **धियः** बुद्धेस्तत्त्वज्ञानस्य वा, यातीति **यः** प्रापकः, **नोऽस्मान्**, **प्रचोदयात्** प्रेरयेत्—इति तदाशयः ।

---

पाठा०—१ संस्पृष्टाभिः क; ग. २ पुनरब्ग्रहणं क. ३ अन्तेन ख. ४ मित्यादेः ख. ५ जपः कार्यः ख.

**संध्यां प्राक्प्रातरेवं हि तिष्ठेदा सूर्यदर्शनात् ।**

**प्राणायामं** पूर्वोक्तं **कृत्वा तृचेनाब्दैवतेन**[1] पूर्वोक्तेनात्मानमद्भिः **संप्रोक्ष्य सावित्रीं जपन् प्रत्यक्संध्यामासीत** । अर्थात् 'प्रत्यङ्मुख' इति लभ्यते । **आ तारकोदयात्** तारकोदयावधि । **प्राक्संध्यां** प्रातःसमये **एवं** पूर्वोक्तविधिमाचरन् प्राङ्मुखः सूर्योदयावधि तिष्ठेत् । अहोरात्रयोः संधौ या क्रिया विधीयते सा **संध्या** । तत्र अहः संपूर्णादित्यमण्डलदर्शनयोग्यः कालः, तद्विपरीता रात्रिः । यस्मिन्काले खण्डमण्डलस्योपलब्धिः स संधिः ॥ २४ ॥

**अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपि ॥ २५ ॥**

**ततः** संध्योपासनानन्तरं द्वयोः **संध्ययोरग्निकार्यं**[2] अग्नौ कार्यं समित्प्रक्षेपादि यत्तत्**कुर्यात्** स्वगृह्योक्तेन विधिना ॥ २५ ॥

**ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् ।**

तदनन्तरं **वृद्धान्** गुरुप्रभृतीन**भिवादयेत्** । कथम् ? **असौ** देवदत्तशर्मा**ऽहमिति** स्वं नाम **कीर्तयन्** ॥—

**गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥ २६ ॥**
**आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ।**
**हितं तस्याचरेन्नित्यं मनोवाक्कायकर्मभिः ॥ २७ ॥**

तथा **गुरुं** वक्ष्यमाणलक्षण**मुपासीत** तत्परिचर्यापरस्तदधीनस्तिष्ठेत् । **स्वाध्यायार्थ**मध्ययनसिद्धये **समाहितो**ऽविक्षिप्तचित्तो भवेत् । **आहूतश्चाप्यधीयीत** गुर्वाहूत एवाधीयीत, न स्वयं गुरुं प्रेरयेत् । यच्च **लब्धं** तत्सर्वं गुरवे **निवेदयेत्** । तथा **तस्य** गुरोर्**हितमाचरेत्** । **नित्यं** सदा । **मनोवाक्कायकर्मभिः** न प्रतिकूलं कुर्यात् । अपिशब्दाद्गुरुदर्शने गौतमोक्तं कण्ठप्रावृतादि[3] वर्जयेत् ॥ २६–२७ ॥

अध्याप्यानाह—

**कृतज्ञाद्रोहिमेधाविशुचिकल्यानसूयकाः ।**
**अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥ २८ ॥**

कृतमुपकारं न विस्मरतीति **कृतज्ञः** । **अद्रोही** दयावान् । **मेधावी** ग्रन्थग्रहणधारणशक्तः । **शुचि**र्बाह्याभ्यन्तरशौचवान् । **कल्यः** आधिव्याधिरहितः । **अनसूयको** दोषानाविष्करणेन गुणाविष्करणशीलः । **साधुः** वृत्तवान् । **शक्तः**

**टिप्प०**—1 तुश्चार्थे व्युत्क्रमे च; संप्रोक्ष्य चेति भावः । 2 तत्समयश्च 'अग्निकार्यं च भिक्षायाः प्रागूर्ध्वं वा तदिष्यते' इति । 3 प्रावृतावसक्तिकापादप्रसारणानि ।

**पाठा०**—१ मुपासीत ग. २ लब्धं तस्मै ख. ३ कल्याणसूचकाः क. ४ अध्याप्याः साधुशक्ताप्तस्वार्थदा धर्मतस्त्विमे च.

शुश्रूषायाम् । **आप्तो** बन्धुः । **ज्ञानदो** विद्याप्रदः । **वित्तदो**ऽर्पणपूर्वकमर्थप्रदाता । एते गुणाः समस्ता व्यस्ताश्च यथासंभवं द्रष्टव्याः । एते च **धर्मतः** शास्त्रानुसारेण अध्याप्याः ॥ २८ ॥

दण्डादिधारणमाह—

**दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ।**

तथा स्मृत्यन्तरप्रसिद्धं पालाशादिदण्डं, **अजिनं** च कार्ष्णादि, **उपवीतं** कार्पासादिनिर्मितं, **मेखलां च** मुञ्जादि, ब्राह्मणादिर्ब्रह्मचारी **धारयेत्** ॥—

भैक्षचर्याप्रकारः—

**ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये ॥ २९ ॥**
**आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।**
**ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम् ॥ ३० ॥**

पूर्वोक्तदण्डादियुक्तो ब्रह्मचारी **ब्राह्मणेष्वनिन्द्येषु** अभिशस्तादिव्यतिरिक्तेषु स्वकर्मनिरतेषु **भैक्षं चरेत् । आत्मवृत्तये** आत्मनो जीवनाय न परार्थं आचार्यतद्भार्यापुत्रव्यतिरेकेण । निवेद्य गुरवे तदनुज्ञातो भुञ्जीत । 'तदभावे तत्पुत्रादा'इति नियमात् । अत्र च 'ब्राह्मण'ग्रहणं संभवे सति नियमार्थम् । यत्तु 'सार्ववर्णिकं भैक्षचरणम्' इति, तत्त्रैवर्णिकविषयम् । यच्च 'चातुर्वर्ण्यं चरेद्भैक्षम्' इति, तदापद्विषयम् । कथं भैक्षचर्या कार्या? **आदिमध्यावसानेषु भवच्छब्दोपलक्षिता** 'भवति भिक्षां देहि', 'भिक्षां भवति देहि', 'भिक्षां देहि भवति' 'भिक्षां भवति देहि' इत्येवं वर्णक्रमेण भैक्षचर्या कार्या ॥ २९-३० ॥

भोजनप्रकारः—

**कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ।**
**आपोशानक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ॥ ३१ ॥**

पूर्वोक्तेन विधिना भिक्षामाहृत्य गुरवे निवेद्य **तदनुज्ञया कृताग्निकार्यो वाग्यतो** मौनी **अन्नं सत्कृत्य** संपूज्य **अकुत्सयन्**ननिन्दन् **आपोशानक्रियां** 'अमृतोपस्तरणमसि' इत्यादिकां **पूर्वं** कृत्वा **भुञ्जीत** । अत्र पुनः अग्निकार्यग्रहणं संध्याकाले कथंचिदकृताग्निकार्यस्य कालान्तरविधानार्थं न पुनस्तृतीयप्राप्त्यर्थम् ३१

**ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ।**
**ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ ३२ ॥**

**ब्रह्मचर्ये स्थित एकान्नं नाद्यादनापदि** व्याध्याद्यभावे । **ब्राह्मणः**

---

**टिप्प०**—1 पणो वेतनभाषाबन्धस्तद्रहितम् । 2 अप्रत्याख्यात्रीत्वात्स्त्रीणामादौ भिक्ष्यमाणतयोपदेशः । 3 प्रतिबन्धात् । 4 मध्याह्नसमये इति भावः । 5 एकस्वामिकं न भुञ्जीतेति भावः ।

---

**पाठा०**—१ अर्पणपूर्वकं ख; ग. २ कार्ष्णाजिनादि ख. ३ भैक्ष्य. ४ सति । नियमार्थं ख. ५ त्रैवर्णिकप्राप्त्यर्थम् ख. ६ कालान्तरं मध्याह्नादि. ७ एकान्नमेकस्वामिकम्.

पुनः श्राद्धेऽभ्यर्थितः सन् कामम[1]श्नीयात्। **व्रतमपीडयन्** मधुमांसपरिहारेण। अत्र 'ब्राह्मण'ग्रहणं क्षत्रियादेः श्राद्धभोजनव्युदासार्थम्। 'राजन्यवैश्ययोश्चैव नैतत्कर्म प्रचक्षते' इति स्मरणात्॥ ३२॥

मधुमांसादिवर्ज्यान्याह—

> **मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम्।**
> **भास्करालोकनाश्लीलपरिवादादि वर्जयेत्॥ ३३॥**

**मधु** क्षौद्रं, न मद्यम्; तस्य 'नित्यं मद्यं ब्राह्मणो वर्जयेत्' इति निषेधात्। **मांसं** छागादेरपि। **अञ्जनं** घृतादिना गात्रस्य, कज्जलादिना चाक्ष्णोः। **उच्छिष्ट**मगुरोः। **शुक्तं** निष्ठुरवाक्यं, नाम्लरसः[2]; तस्याभक्ष्यप्रकरणे निषेधात्। **स्त्रिय**मुपभोगे। **प्राणिहिंसनं** जीववधः। **भास्कर**स्योदयास्तमया**वलोकनम्**[3]। **अश्लील**मसत्यभाषणम्[4]। **परिवादः** सदसद्रूपस्य परदोषस्य ख्यापनम्। **'आदि'**शब्दात् स्मृत्यन्तरोक्तं गन्धमाल्यादि गृह्यते। एतानि ब्रह्मचारी **वर्जयेत्**॥ ३३॥

गुर्वादिलक्षणमाह—

> **स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।**
> **उपनीय ददद्वेदमाचार्यः स उदाहृतः॥ ३४॥**

योऽसौ गर्भाधानाद्या उपनयनपर्यन्ताः **क्रिया** यथाविधि **कृत्वा वेदमस्मै** ब्रह्मचारिणे **प्रयच्छति स गुरुः**। यः पुनरुपनयनमात्रं कृत्वा **वेदं** प्र[5]यच्छति **स आचार्यः**॥ ३४॥

उपाध्यायर्त्विग्लक्षणम्—

> **एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते।**
> **एते मान्या यथापूर्वमेभ्यो माता गरीयसी॥ ३५॥**

वेदस्यै**कदेशं** मन्त्र-ब्राह्मणयोरेकं अङ्गानि वा योऽध्यापयति स **उपाध्यायः**। यः पुनः पाक**यज्ञादिकं** वृतः **करोति** स **ऋत्विक्**। **एते** च गुर्वाचार्योपाध्यायर्त्विजो **यथापूर्वं** यथाक्रमेण **मान्याः** पूज्याः। **एभ्यः** सर्वेभ्यो **माता गरीयसी** पूज्यतमा॥ ३५॥

वेदग्रहणार्थं ब्रह्मचर्यावधिमाह—

> **प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा।**
> **ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे॥ ३६॥**

यदा विवाहासंभवे 'वेदानधीत्य वेदौ वा वेदं वा' इति प्रवर्तते तदा **प्रतिवेदं** वेदं वेदं प्रति **ब्रह्मचर्यं** पूर्वोक्तं द्वादशवर्षाणि कार्यम्। अशक्तौ पञ्च। **'ग्रहणा-**

---

पाठा०—१ कामं यथेष्टम्. २ न रसादि क. ३ भास्करस्य चालोकनं क. ४ गुह्यभाषणं ख. ५ ददाति ख.

न्तिकं इत्येके वर्णयन्ति । केशान्तः पुनर्गोदानाख्यं कर्म गर्भादारभ्य षोडशे वर्षे ब्राह्मणस्य कार्यम् । एतच्च द्वादशवार्षिके वेदव्रते बोद्धव्यम् । इतरस्मिन्पक्षे यथासंभवं द्रष्टव्यम् । राजन्य-वैश्ययोस्तूपनयनकालवद्द्वाविंशे चतुर्विंशे वा द्रष्टव्यम् ॥ ३६ ॥

उपनयनकालस्य परमावधिमाह—

**आ षोडशादा द्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।**
**ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥ ३७ ॥**
**अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः ।**
**सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ ३८ ॥**

**आषोडशाद्**वर्षात्षोडशवर्षं यावत् **आ द्वाविंशादाचतुर्विंशाद्**वर्षाद्[3] **ब्रह्मक्षत्रविशां औपनायनिकः** उपनयनसंबन्धी **परः कालः** । नातःपरमुपनयनकालोऽस्ति, किंतु **अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः** सर्वधर्मेष्वनधिकारिणो भवन्ति । **सावित्रीपतिताः** पतितसावित्रीका भवन्ति । सावित्रीदानयोग्या न भवन्ति । **व्रात्याः** संस्कारहीनाश्च [2]**व्रात्यस्तोमात्क्रतो**र्विना कृते तु तस्मिन्नुपनयनाधिकारिणो भवन्ति ॥ ३७-३८ ॥

'आद्यास्त्रयो द्विजाः' ( आचार. २०।१ ) इत्युक्तं, तत्र हेतुमाह—

**मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ।**
**ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥ ३९ ॥**

[3]**मातुः** सकाशात्प्रथमं **जायन्ते, मौञ्जिबन्धनाच्च द्वितीयं** जन्म यस्मा**त्तस्मादेते** ब्राह्मण-क्षत्रिय-वैश्या **द्विजा** उच्यन्ते ॥ ३९ ॥

वेदग्रहणाध्ययनफलमाह—

**यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ।**
**वेद एव द्विजातीनां निःश्रेयसकरः परः ॥ ४० ॥**

**यज्ञानां** श्रौत-स्मार्तानां, **तपसां** कायसंतापरूपाणां चान्द्रायणादीनां, **शुभानां च कर्मणां** उपनयनादिसंस्काराणां अवबोधकत्वेन **वेद एव द्विजातीनां** परो **निःश्रेयसकरो**[4] नान्यः । 'वेद एव' इति तन्मूलकत्वेन स्मृतेरप्युपलक्षणार्थम् ॥ ४० ॥

---

**टिप्प०**—1 गावः केशा दीयन्ते खण्ड्यन्ते यस्मिन्. 2 व्रात्यस्तोमो नाम व्रात्यानां प्रायश्चित्तक्रतुः । तेन चोद्दालकव्रतादिप्रायश्चित्तान्तरमप्युपलक्ष्यते इति । 3 द्विजातिधर्मबहिष्कृतत्वे हेतुः—मातुरिति—**अप०** ।

---

**पाठा०**—१ वा यथासंभवं क. २ त्रयोऽप्येते यथाकालमसंस्कृताः. ३ ब्राह्मणक्षत्रियविशां ख. ४ करो मोक्षकरो ख.

ग्रहणाध्ययनफलमुक्त्वेदानीं काम्यव्रतब्रह्मयज्ञाध्ययनफलमाह—

मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः ।
पितॄन्मधुघृताभ्यां च ऋचोऽधीते च[2] योऽन्वहम् ॥४१॥
यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः ।
प्रीणाति देवानाज्येन मधुना च पितॄंस्तथा ॥ ४२ ॥
स तु सोमघृतैर्देवांस्तर्पयेद्योऽन्वहं पठेत् ।
सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ ४३ ॥

योऽन्वहमृचोऽधीते स मधुना पयसा च देवान्पितॄंश्च मधुघृताभ्यां तर्पयति । यः पुनः शक्तितोऽन्वहं यजूंष्यधीते स घृतामृतैर्देवान्पितॄंश्च मधु-घृताभ्यां तर्पयति । यस्तु सामान्यन्वहमधीते स सोमघृतैर्देवान्पितॄंश्च मधुसर्पिर्भ्यां प्रीणाति । ऋगादिग्रहणं सामान्येन ऋगादिमात्रप्राप्त्यर्थम् ॥ ४१–४३ ॥

मेदसा तर्पयेद्देवानथर्वाङ्गिरसः पठन् ।
पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ॥ ४४ ॥
वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः ।
इतिहासांस्तथा विद्याः शक्त्याधीते हि योऽन्वहम् ॥४५॥
मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् ।
करोति तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ ४६ ॥
ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ।

यः पुनः शक्तितोऽन्वहं अथर्वाङ्गिरसोऽधीते स देवान्मेदसा पितॄंश्च मधुसर्पिर्भ्यां तर्पयति । यस्तु वाकोवाक्यं[2] प्रश्नोत्तररूपवेदवाक्यम् । पुराणं ब्राह्मादि । चकारान्मानवादिधर्मशास्त्रम् । नाराशंसीश्च रुद्रदैवत्यान्मन्त्रान् । गाथा यज्ञगाथेन्द्रगाथाद्याः । इतिहासान् महाभारतादीन् । विद्याश्च वारुणाद्या विद्याः । शक्तितोऽन्वहमधीते । स मांसक्षीरौदनमधुसर्पिर्भिर्देवान् पितॄंश्च मधुसर्पिर्भ्यां तर्पयति ॥ ४४–४६ ॥ ते पुनस्तृप्ताः सन्तो देवाः पितरश्च एनं स्वाध्यायकारिणं सर्वकामफलैः शुभैरनन्योपघातलक्षणैस्तर्पयन्ति ॥–

---

टिप्प०—1 द्विजत्वसाधारण्येनेति भावः. 2 यथा—पृच्छामि त्वा परमन्तं पृथिव्याः इति प्रश्नः, इयं वेदिः परो अन्तः इत्युत्तरम्. एवमन्यदपि वाकोवाक्यं ज्ञेयम्.

---

पाठा०—१ काम्यब्रह्म ख. २ हि यो ख. ३ पितॄंश्च मधुना द्विजः. ४ प्रीणाति क. ५ मंत्र. ६ न्पितॄंश्च मधुसर्पिषा । संतर्पयेद्यथाशक्ति योऽथर्वाङ्गिरसीः पठेत्. ७ विद्यां योऽधीते शक्तितोऽन्वहम्. ८ च तथा.

प्रशंसार्थमाह—

**यं यं क्रतुमधीते[1] च तस्य तस्याप्नुयात्फलम् ॥ ४७ ॥**
**त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते ।**
**[2]तपसश्च परस्येह नित्यं स्वाध्यायवान्द्विजः ॥ ४८ ॥**

यस्य यस्य क्रतोः प्रतिपादकं वेदैकदेशमन्वहमधीते **तस्य तस्य** क्रतोः **फलमवाप्नोति** । तथा **वित्तपूर्णायाः पृथिव्याः त्रिः** त्रिवारं **दानस्य** यत्फलं **परस्य तपस**श्चान्द्रायणादेर्यत्फलं तदपि **नित्यं स्वाध्यायवाना**प्नोति । '[3]नित्य'ग्रहणं काम्यस्यापि सतो नित्यत्वज्ञापनार्थम् ॥ ४७-४८ ॥

एवं सामान्येन ब्रह्मचारिधर्मानभिधायाधुना नैष्ठिकस्य विशेषमाह—

**नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसंनिधौ ।**
**तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥ ४९ ॥**
**अनेन विधिना देहं [4]सादयन्विजितेन्द्रियः ।**
**ब्रह्मलोकमवाप्नोति [5]न चेहाजायते पुनः ॥ ५० ॥**

**[6]अनेनो**क्तेन प्रकारेणात्मानं निष्ठां उत्क्रान्तिकालं नयतीति **नैष्ठिकः** स यावज्जीवमा**चार्य**समीपे **वसेत्** । न वेद[7]ग्रहणोत्तरकालं स्वतन्त्रो भवेत् । **तदभावे** तत्पुत्रसमीपे, तदभावे तद्भार्यासमीपे, तदभावे वै[8]श्वानरेऽपि । अनेनोक्तविधिना **देहं [4]सादयन्** क्षपयन् **विजितेन्द्रियः** इन्द्रियजये विशेषप्रयत्नवान्ब्रह्मचारी **ब्रह्मलोक**ममृतत्व**माप्नोति** । न कदाचिदिह पुनराजायते ॥ ४९-५० ॥

इति ब्रह्मचारिप्रकरणम् ।

---

## अथ विवाहप्रकरणम् ३

यः पुनर्वैवाह्यस्तस्य विवाहार्थं स्नानमाह—

**गुरवे तु वरं दत्त्वा स्नायाद्वा तदनुज्ञया ।**
**वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥ ५१ ॥**

पूर्वोक्तेन प्रकारेण **वेदं** मन्त्रब्राह्मणात्मकम्, **व्रतानि**, ब्रह्मचारिधर्माननुक्रान्तान् । **उभयं वा, पारं नीत्वा** समाप्य, **गुरवे** पूर्वोक्ताय **वर**मभिलषितं यथाशक्ति **दत्त्वा स्नायात्** । अशक्तौ **तदनुज्ञया** अदत्तवरोऽपि । एतेषां च पक्षाणां शक्तिकालाद्यपेक्षया व्यवस्था ॥ ५१ ॥

---

**पाठा०—१ मधीयीत; मधीतेऽसौ ख. २ तपसो यत्परस्य ख. ३ नित्य. ४ साधयन् [ अस्मिन्पाठे विपरीतलक्षणा बोध्या—बा. ] ५ न चेह जायते. ६ उक्तप्रकारेण ख. ७ ग्रहणकालोत्तरं ख. ८ स्वोपास्याग्निसंनिधौ ख. ९ स्नायीत.**

स्नानानन्तरं किं कुर्यादित्यत आह—

**अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।**
**अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ ५२ ॥**

**अविप्लुतब्रह्मचर्यो**ऽस्खलितब्रह्मचर्यः । **लक्षण्यां** बाह्याभ्यन्तरलक्षणैर्युक्ताम् । बाह्यानि 'तनुलोमकेशदशनाम्' इत्यादीनि ( ३।१० ) **मनुनो**क्तानि । आभ्यन्तराणि 'अष्टौ पिण्डान्कृत्वा' इत्याद्या**श्वलायनो**क्तविधिना ज्ञातव्यानि । **स्त्रियं** नपुंसकत्वनिवृत्तये स्त्रीत्वेन परीक्षिताम् । **अनन्यपूर्विकां** दानेनोपभोगेन वा पुरुषान्तराऽपरिगृहीताम् । **कान्तां** कमनीयां वोढुर्मनोनयनानन्दकारिणीम् । 'यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिः' **इत्यापस्तम्ब**स्मरणात् । एतच्च न्यूनाधिकाङ्गादिबाह्यदोषाभावे । **असपिण्डां** समान एकः पिण्डो देहो यस्याः सा सपिण्डा, न सपिण्डा असपिण्डा ताम् । सपिण्डता च एकशरीरावयवान्वयेन भवति । तथा हि–पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सहैकपिण्डता । एवं पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात् । एवं मातृशरीरावयवान्वयेन मात्रा । तथा मातामहादिभिरपि मातृद्वारेण । तथा मातृष्वसृमातुलादिभिरप्येकशरीरावयवान्वयात् । तथा पितृव्य[2]-पितृष्वस्रादिभिरपि । तथा पत्न्या सह पत्न्या एकशरीरारम्भकतया । एवं भ्रातृभार्याणामपि परस्परमेकशरीरार[3]ब्धैः सहैकशरीरारम्भकत्वेन । एवं यत्र यत्र 'सपिण्ड'शब्दस्तत्र तत्र साक्षात्परम्परया वा एकशरीरावयवान्वयो वेदितव्यः । यद्येवं मातामहादीनामपि 'दशाहं शावमाशौचं सपिण्डेषु विधीयते' इत्यविशेषेण प्राप्नोति । स्यादेतत्,–यदि तत्र 'प्रत्तानामितरे कुर्युः' इत्यादिविशेषवचनं न स्यात् । अतश्च सपिण्डेषु यत्र विशेषवचनं नास्ति तत्र 'दशाहं शावमाशौचम्' इत्येतद्वचनमवतिष्ठते । अवश्यं चैकशरीरावयवान्वयेन सापिण्ड्यं वर्णनीयम् । 'आत्मा हि जज्ञ आत्मनः' इत्यादिश्रुतेः । तथा 'प्रजामनु प्रजायसे' इति च । 'स एवायं विरूढः प्रत्यक्षेणोपलभ्यते, दृश्यते चापि सारूप्यम् । देहत्वमेवान्यत् इत्यापस्तम्बवचनाच्च । तथा गर्भोपनिषदि—'एतत् षाट्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतः । अस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसरुधिराणि मातृतः' इति [4]तत्र तत्रावयवान्वय-

---

**टिप्प०**—1 तानि च—पूर्वस्यां रात्रौ गोष्ठवल्मीककितवस्थानह्रदेरिणक्षेत्रचतुष्पथश्मशानेभ्यो मृत्तिकां गृहीत्वा पिण्डाष्टकं कर्तव्यम् । तत्रानुक्रमेण प्रथमे पिण्डे स्पृष्टे धान्यवती भवेत् । द्वितीये स्पृष्टे पशुमती भवेत् । तृतीयेऽग्निहोत्रशुश्रूषणपरा भवति । चतुर्थे विवेकिनी चतुरा सर्वजनार्जनपरा भवति । पञ्चमे रोगिणी । षष्ठे वन्ध्या । सप्तमे व्यभिचारिणी । अष्टमे विधवा भवेदित्याश्वलायनोक्तानि. 2 पितामहावयवान्वयत्वात्. 3 स्वस्वपतिभिरिति शेषः. 4 तत्र तत्र=पुत्र-कन्ययोः.

---

**पाठा०**—१ केशादीनि मनुप्रोक्तानि क. २ सह सापिण्ड्यं ख. ३ एकशरीरारम्भैः क.

प्रतिपादनात्। निर्वाप्यपिण्डान्वयेन तु सापिण्ड्ये मातृसंताने भ्रातृपितृव्यादिषु च सापिण्ड्यं न स्यात्। समुदायशक्त्यङ्गीकारेण रूढिपरिग्रहेऽवयवशक्तिस्तत्र तत्रावगम्यमाना परित्यक्ता स्यात्। सत्स्ववयवार्थेषु योऽन्यत्रार्थे प्रयुज्यते। तत्रानन्यगतित्वेन समुदायः प्रसिद्ध्यति। एवं परम्परयैकशरीरावयवान्वयेन तु सापिण्ड्ये यथा नातिप्रसङ्गस्तथा वक्ष्यामः। **यवीयसीं** वयसा प्रमाणतश्च न्यूनां **उद्वहेत्** परिणयेत् स्वगृह्योक्तेन विधिना ॥ ५२ ॥

विशेषान्तराण्याह—

**अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्।**

**अरोगिणीं** अचिकित्सनीयव्याध्यनुपसृष्टाम्। **भ्रातृमतीं** पुत्रिकाकरणशङ्कानिवृत्तये। अनेनापरिभाषितापि पुत्रिका भवतीति गम्यते। **असमानार्षगोत्रजां** ऋषेरिदमार्षं नाम प्रवर इत्यर्थः। गोत्रं वंशपरम्पराप्रसिद्धम्, आर्षं च गोत्रं च आर्षगोत्रे, समाने आर्षगोत्रे यस्यासौ समानार्षगोत्रस्तस्माज्जाता समानार्षगोत्रजा, न समानार्षगोत्रजा असमानार्षगोत्रजा ताम्। गोत्रप्रवरौ च पृथक्पृथक्पर्युदासे-निमित्तम्। तेनासमानार्षजामसमानगोत्रजामित्यर्थः। तथा च 'असमानप्रवरैर्विवाहः' ( गौ. स्मृ. ४।१ ) इति **गौतमः**। तथा 'असपिण्डा च या मातुरसपिण्डा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥' इति (३।५) **मनुः**। तथा मातृगोत्रामप्यपरिणेयां केचिदिच्छन्ति, 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव गत्वा चान्द्रायणं चरेत् ॥' इति प्रायश्चित्त-स्मरणात्। अत्र च 'असपिण्डाम्' इत्यनेन पितृष्वसृ-मातृष्वस्रादिदुहितृनिषेधः। तथा 'असगोत्राम्' इत्यनेनासपिण्डाया अपि भिन्नसन्तानजायाः समानगोत्राया निषेधः। तथा 'असमानप्रवराम्' इत्यनेनाप्यसपिण्डाया असगोत्राया अपि समानप्रवराया निषेधः। तथा च 'असपिण्डाम्' इत्येतत्सार्ववर्णिकम्; सर्वत्र सापिण्ड्यसद्भावात्। 'असमानार्षगोत्रजाम्' इत्येतत्त्रैवर्णिकविषयम्। यद्यपि

---

**टिप्प०**—1 अत्र संबन्धो न साक्षात्, किंतु व्यवहितः, तथा च प्रवरणं ऋषिसंबन्धेनाग्निप्रार्थनं प्रवरः। तच्च कल्पसूत्रादिषु **'अग्ने महाँ असि' 'अग्निर्देवो होता देवान्यः'** इत्यादौ प्रसिद्धम्। 2 पृथक् प्रायश्चित्तं चोक्तं सुमन्तुबौधायनादिभिः—'सगोत्रां चेदमत्योपयच्छेदभ्रातृवदेनां बिभृयात्, प्रजाता चेत् कृच्छ्राब्दपादं चरेत्' इति।

---

**पाठा०—१ पिण्डनिर्वापणयुक्त्या निर्वाप्यसपिण्डा. ख. २ भ्रातृपुत्रादिषु ख. भ्रातृव्यपितृव्या. ग. ३ प्रमाणेन च क. ४ असमानगोत्रजां असमानार्षजामित्यर्थः ख. ५ असगोत्रा च ख. ग. ६ 'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि। जन्मनाम्नोरविज्ञाने तूद्वहेदविशङ्कितः ॥' इति व्यासः क. ७ त्यक्त्वा ख.**

राजन्यविशां प्रातिस्विकगोत्राभावात्प्रवराभावस्तथापि पुरोहितगोत्रप्रवरौ वेदितव्यौ। तथा च 'यजमानस्यार्षेयान्प्रवृणीते' इत्युक्त्वा 'पौरोहित्यान्राजन्यविशां प्रवृणीते' इत्याहाश्वलायनः (श्रौ. सू. अ. ६ खं. १५)। सपिण्डासु समानगोत्रासु मानप्रवरासु भार्यात्वमेव नोत्पद्यते। रोगिण्यादिषु तु भार्यात्वे उत्पन्नेऽपि दृष्टविरोध एव ॥—

'असपिण्डाम्' इत्यत्रैकशरीरावयवान्वयद्वारेण साक्षात्परम्परया वा सापिण्ड्यमुक्तं, तच्च सर्वत्र सर्वस्य यथाकथंचिदनादौ संसारे संभवतीत्यतिप्रसङ्ग इत्यत आह—

## पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥ ५३ ॥

**मातृतो** मातुः संताने **पञ्चमादूर्ध्वं पितृतः** पितुः संताने **सप्तमादूर्ध्वं,** 'सापिण्ड्यं निवर्तते' इति शेषः। अतश्चायं 'सपिण्ड'शब्दोऽवयवशक्त्या सर्वत्र प्रवर्तमानोऽपि निर्मन्थ्य-पङ्कजादिशब्दवन्नियतविषय एव। तथा च पित्रादयः षट् सपिण्डाः, पुत्रादयश्च षट्, आत्मा च सप्तमः, संतानभेदेऽपि यतः संतानभेदस्तमादाय गणयेद्यावत्सप्तम इति सर्वत्र योजनीयम्। तथा च मातरमारभ्य तत्पितृपितामहादिगणनायां पञ्चमसंतानवर्तिनी मातृतः पञ्चमीत्युपचर्यते। एवं पितरमारभ्य तत्पित्रादिगणनायां सप्तमपुरुषसंतानवर्तिनी पितृतः सप्तमीति। तथा च 'भगिन्योर्भगिनीभ्रात्रोर्भ्रातृपुत्रीपितृव्ययोः। विवाहे द्व्यादिभूतत्वाच्छाखाभेदोऽवगण्यते ॥' यद्यपि **वसिष्ठेनो**क्तं 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा' इति, 'त्रीनतीत्य मातृतः पञ्चातीत्य च पितृतः' इति च **पैठीनसिना**, तदप्यर्वाङ्निषेधार्थं न पुनस्तत्प्राप्त्यर्थमिति सर्वस्मृतीनामविरोधः। एतच्च समानजातीये द्रष्टव्यम्, विजातीये तु विशेषः। यथाह **शङ्खः**—'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः। एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु ॥' एकस्माद्ब्राह्मणादेर्जाताः एकजाताः। पृथक्क्षेत्राः भिन्नजातीयासु स्त्रीषु जाताः। पृथग्जनाः समानजातीयासु भिन्नासु स्त्रीषु जातास्ते एकपिण्डाः सपिण्डाः, किंतु पृथक्शौचाः। पृथक्शौचमाशौचप्रकरणे वक्ष्यामः। 'पिण्डस्त्वावर्तते त्रिषु' त्रिपुरुषमेव सापिण्ड्यमिति ॥ ५३ ॥

## दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात्।

पुरुषा एव पूरुषाः, **दशभिः पुरुषै**र्मातृतः पञ्चभिः पितृतः पञ्चभि**र्विख्यातं**

**टिप्प०**—1 'निःशेषमन्थ्येनेष्टकाः पचन्ति' इत्यत्र निःशेषमथ्यत इति योगस्याधानकालमथितत्वाच्चिरनिर्मथिते नित्यं धृते चयनोपक्रमात् प्रागपि विद्यमाने गार्हपत्याख्ये चयनं प्रक्रम्योखां निर्माय, तस्यामुखायां कंचित्कालं धारणाय योऽग्निर्निर्मथ्यते तस्मिन्नचिरनिर्मथिते च सत्त्वेनान्यस्यैव प्रत्यासन्नत्वेन तत्परिग्रहाय रूढिस्वीकारस्तद्वत् इत्याशयः। 'पङ्कज'शब्दस्तु प्रसिद्ध एव। 2 माधवस्तु—अस्य भिन्नजातीयमात्रपरत्वमाह।

**पाठा०**—१ गोत्रप्रवर्तकऋष्यपत्यत्वप्रयुक्तत्वमत्र प्रातिस्विकत्वम्. प्रातिस्विकगोत्राभावस्तथापि ख. २ दृष्टदोषविरोधः क. ३ शब्दो योगेऽवयव. क. ४ वयवशक्त्या प्रवर्त. क. ५ पञ्चमपुरुषवर्तिनी ख. ६ ऽन्यादि ख. ७ वगम्यते क. ८ एकपिण्डाः सपिण्डाः ख. ९ पौरुष क.

यत्कुलं तस्मात् । **श्रोत्रियाणा**मधीतवेदानाम् । अध्ययनमुपलक्षणं श्रुताध्ययनसंपन्नानाम् । महच्च तत्कुलं च **महाकुलं** पुत्रपौत्रपशुदासीग्रामादिसमृद्धं, तस्मात्कन्यका आहर्तव्येति नियम्यते ॥

एवं सर्वतः प्राप्तौ सत्यामपवादमाह—

**स्फीतादपि न संचारिरोगदोषसमन्वितात् ॥ ५४ ॥**

स्फीतादिति । **संचारिणो रोगाः** श्वित्रकुष्ठापस्मारप्रभृतयः शुक्रशोणितद्वारेणानुप्रविशन्तो **दोषाः** पुनः हीनक्रियनिःपौरुषत्वादयो मनुनोक्ताः । एतैः **समन्वितात्स्फीतादपि** पूर्वोक्तान्महाकुलादपि नाहर्तव्या ॥ ५४ ॥

एवं कन्याग्रहणनियममुक्त्वा कन्यादाने वरनियममाह—

**एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।**
**यत्नात्परीक्षितः पुंस्त्वे युवा धीमाञ्जनप्रियः ॥ ५५ ॥**

**एतैरेव** पूर्वोक्तै**र्गुणैर्युक्तो** दोषैश्च वर्जितो वरो भवति । तस्यायमपरो विशेषः—**सवर्ण** उत्कृष्टो वा, न हीनवर्णः । **श्रोत्रियः** स्वयं च श्रुताध्ययनसंपन्नः । **यत्नात्** प्रयत्नेन **पुंस्त्वे परीक्षितः** । परीक्षोपायश्च नारदेन दर्शितः—'यस्याप्सु प्लवते बीजं ह्रादि मूत्रं च फेनिलम् । पुमान्स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्ढकः ॥ इति । **युवा** न वृद्धः । **धीमान्** लौकिकवैदिकव्यवहारेषु निपुणमतिः । **जनप्रियः** स्मितपूर्वमृद्वभिभाषणादिभिरनुरक्तजनः[1] ॥ ५५ ॥

रति-पुत्र-धर्मार्थत्वेन विवाहस्त्रिविधः । तत्र पुत्रार्थो द्विविधः—नित्यः, काम्यश्च । तत्र नित्ये प्रजार्थे 'सवर्णः श्रोत्रियो वरः' ( आचार. ५५ ) इत्यनेन सवर्णा मुख्या दर्शिता । इदानीं काम्ये नित्यसंयोगे चानुकल्पो वक्तव्य इत्यत आह—

**यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः[2] ।**
**नैतन्मम मतं यस्मात्तत्रायं[3] जायते स्वयम् ॥ ५६ ॥**

**यदुच्यते** 'सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि । कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः ॥' इत्युपक्रम्य—ब्राह्मणस्य चतस्रो भार्याः, क्षत्रियस्य तिस्रः, वैश्यस्य द्वे इति द्विजातीनां शूद्रावेदनमिति **नैत**द्याज्ञवल्क्यस्य **मतम्** । **यस्मादयं** द्विजाति**स्तत्र स्वयं जायते** । 'तज्जाया जाया भवति यदस्यां जायते पुनः' इति श्रुतेः । अत्र च 'तत्रायं जायते स्वयम्' इति हेतुं वदता नैत्यकपुत्रोत्पादनाय काम्यपुत्रोत्पादनाय वा प्रवृत्तस्य शूद्रापरिणयननिषेधं कुर्वता नैत्यकपुत्रोत्पादनानुकल्पे काम्ये च पुत्रोत्पादने ब्राह्मणस्य क्षत्रियावैश्ये, क्षत्रियस्य च वैश्या[4] भार्यानुज्ञाता भवति ॥ ५६ ॥

**टिप्प०—1** वधूवरयोर्न स्वतः सापिण्ड्यम्, किंतु कूटस्थसंततित्वात्सापिण्ड्येनैव, अतोऽष्टमं वरं प्रति कन्यया असापिण्ड्येऽपि कन्यायाः कूटस्थेन सापिण्ड्याद्वरस्तां प्रति सपिण्ड एवेति वदन्तो **निर्णयसिन्ध्वादयोऽ**पास्ताः, सपिण्डसन्ततिस्थत्वेन सापिण्ड्ये सोदकादावपि तदापत्तेः—इति **बा.**

**पाठा०—१** स्मितमृदुपूर्वाभिभाषण **क.** २ शूद्रादारोप. ३ तत्रात्मा जायते. ४ वैश्याभ्यनुज्ञा **ख.**

इदानीं रतिकामस्योत्पन्नपुत्रस्य वा विनष्टभार्यस्याश्रमान्तरानधिकारिणो गृहस्थाश्रमावस्थामात्राभिकाङ्क्षिणः परिणयनक्रममाह—

**तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।**
**ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः ॥ ५७ ॥**

**वर्णक्रमेण ब्राह्मणस्य तिस्रो** भार्याः । **क्षत्रियस्य द्वे** । **वैश्यस्यैका** । **शूद्रस्य तु स्वैव भार्या** भवति । सवर्णा पुनः सर्वेषां मुख्या स्थितैव । पूर्वस्याः पूर्वस्या अभावे उत्तरोत्तरा भवति । अयमेव च क्रमो नैत्यकानुकल्पे काम्ये च पुत्रोत्पादनविधौ । अतश्च यच्छूद्रापुत्रस्य पुत्रमध्ये परिगणनं विभागसंकीर्तनं च, तथा 'विप्रान्मूर्धावसिक्तो हि' इत्युपक्रम्य 'विन्नास्वेष विधिः स्मृतः' इति च तत् रतिकामस्याश्रममात्राभिकाङ्क्षिणो वा नान्तरीयकतयोत्पन्नस्य ॥ ५७ ॥

विवाहानाह—

**ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता ।**
**तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ ५८ ॥**

स **ब्राह्माभिधानो विवाहः** यस्मिन्नुक्तलक्षणाय वरायाहूय यथाशक्त्यलं**कृता** कन्या **दीयते** उदकपूर्वकं, तस्यां **जातः** पुत्र **उभयतः** पित्रादीन्दश पुत्रादींश्च दश, आत्मानं **चैकविंशं पुनाति** सद्वृत्तश्चेत् ॥ ५८ ॥

दैवार्षविवाहौ—

**यज्ञस्थ ऋत्विजे दैव आदायार्षस्तु गोद्वयम् ।**
**चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ ५९ ॥**

स दैवो विवाहो यस्मिन्यज्ञानुष्ठाने वितते **ऋत्विजे** यथाशक्त्यलंकृता कन्या दीयते । यत्र पुन**र्गोमिथुनमादाय** कन्या दीयते स **आर्षः** । **प्रथमजो** दैवविवाहज**श्चतुर्दश पुनाति** सप्तावरान् सप्त परान् । **उत्तरज** आर्षविवाहजः **षट् पुनाति** त्रीन्पूर्वान् त्रीन्परान् ॥ ५९ ॥

प्राजापत्यविवाहलक्षणम्—

**इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने ।**
**स कायः पावयेत्तज्जः षट् षड्वंश्यान्सहात्मना ॥ ६० ॥**

**'सह धर्मं चरताम्' इति** परिभाष्य कन्यादानं **स** प्राजापत्यः । **तज्जः षट्** पूर्वान्षट् परान् **आत्मना सह** एवं त्रयोदश **पुनाति** ॥ ६० ॥

---

**टिप्प०**—1 एतत्तु यावज्जीवम्, नतु तन्मध्ये आश्रमान्तरपरिग्रहः, स्त्र्यन्तरपरिग्रहो वेति विशेषः—इति **नृसिंह-हरदत्तौ.**

---

**पाठा०— १ अन्योद्देशकव्यापारनिर्वर्त्यत्वं; यमन्तरा नोद्देश्यसिद्धिस्तत्वं वा नान्तरीयकत्वम्. २ सहोभौ. ३ धर्ममित्युक्त्वा. ४ सह चात्मनः.**

